दृष्टीनिर्युष्मन्मतानुगतानिः पूर्वमादौ सर्वज्ञैः प्रकल्पितं प्ररूपितमासीत् न हि सर्वज्ञा धमसारं ब्रुवते । यद्गृहस्थैर्ग्लानवैयावृत्त्यं कार्यं नतूपयुक्तेन संयतेनेति । रोजवद्भिरप्यनुमतोगृहस्थप्रेरणादनुमोदनाच्च ॥ १६ ॥

---

॥ टीका—यथा प्रतिज्ञातमाह । (एरिसेत्यादि) येयमीदृक्षा वाक् यतिना ग्लानस्यानी य नदेयमित्येपा अग्रे वेणुवंशवत्कर्षिता तन्वी युक्त्यक्षमत्वात् डुर्बलेत्यर्थः । तामेव वाचं दर्शयति । गृहिणां गृहस्थानां यदन्याहृतं तद्यतेर्नोक्तुं श्रेयः श्रेयस्करं नतु निक्षूणां संबंधीति । अग्रे तनुत्वं चास्या वाचएवं इष्टव्यं । यथा गृहस्थान्याहृतं जीवोपमर्देन जाति यतीनांतूज्ञमादि दोपरहितमिति ॥ १५ ॥ किंच । (धम्मपस्रवणेत्यादि) धर्मस्य प्रज्ञापना देशना यथा यतीनां दानादिनोपकर्तव्यमित्येवंनूता या सा सारंनाणां गृहस्थानां विशोधिकायतयस्त्वनुष्ठानेनैव विशुध्यंति । नतु तेषां दानाधिकारोस्तीत्येतत् दूषयितुं प्रक्रमते । नतु नैवैतानिर्यथागृहस्थैनैव पिंमदानादिना यतेर्ग्लानाद्यवस्थायामुपकर्तव्यं । नतु यतिनिरेव परस्परमित्येवंनूतानिर्युष्मदीयानिर्दृष्टिनिर्धर्मप्रज्ञापनादिनिः पूर्वमादौ सर्वज्ञैः प्रकल्पितं प्ररूपितं प्रख्यापितमासीदिति । यतो नहि सर्वज्ञाएवंनूतं परिफल्गुप्रायमर्थं प्ररूपयंति यथा असंयतैरेपणाद्यनुपयुक्तैर्ग्लानादेर्वैयावृत्त्यं विधेयं नतूपयुक्तेन संयतेनेति । अपिच जवद्भिरपि ग्लानोपकारोऽन्युपगतएव । गृहदनुमोदनाच्च ततोजवंतस्तत्कारिणस्तत्प्रद्वेषिणश्चेत्यापन्नमिति ॥ १६ ॥

सव्वाहिं अणुजुत्तीहिं, अचयंताजवित्तए ॥ ततो वायं णिराकिच्चा, ते नुज्जोवि पगप्निए ॥ १७ ॥ रागदोसाजिन्नूयणा, मिठत्तेण अन्निहुता ॥ आउस्स सरणं जंति, टंकणाइव पव्वयं ॥ १८ ॥

अर्थ—सव्वाहिं के० ते गोसालादिक मतानुसारी अन्य समस्त अणुजुत्तीहिं के० अनुयुक्ति एटले हेतु दृष्टांते करी अचयंताजवित्तए के० पोताने पक्षे पोतानो पक्ष स्थापन करवाने असमर्थ बता ततो के० ते माटे वायंणिराकिच्चाके० वाद मूकीने तेजुज्जो के० ते फरी फरी विपगप्निए के० विशेपे धृष्टपणु करे एटले एम कहेके अमारे जेम परंपरागतछे तेज श्रेष्ठछे अन्यथी अमारे कांइ काम नथी इत्यादिक कहीने धृष्ट पणु अंगीकार करे पण युक्ति पूर्वक जैनमतानुसारीने उत्तर आपी शके नही ॥१७॥ ते रागदोस के० राग अने द्वेपे अन्निनूयण्णाके० पराजव्या थका सारी युक्तिये करी प्रत्युत्तर आपवाने असमर्थ एवा मिठत्तेण के० मिथ्यादृष्टियें करीने अनिहुता के० व्यासठता आउस्ससरणंजंति के० ते अनार्य अनेक आक्रोस एटले असत्य वचने दंम मुष्ट्यादिक दण

वानो जे व्यापार तेनुं शरण ग्रहण करे टंकणाइव पव्वयं के० जेम टंकण एटले म्लेच्छादिक लोको जेहे ते शस्त्रादिके करी युद्ध करवाने असमर्थ हता पर्वतनो सरण ग्रहण करे तेम पूर्वोक्त कुतीर्थिकोपण युक्तिपूर्वक उत्तर देवाने असमर्थ हता क्रोधनो सरण अंगीकार करे. ॥ १८ ॥

॥ दीपिका–( सव्वेहिंति ) तेगोशालमतीयादिगंबरावा सर्वानिरनुगतयुक्तिनिः स्वपक्षं यापयितुमशक्नुवंतस्थापयितुस्ततोवादं निराकृत्य ते तीर्थिका नूयोपि प्रगल्निनतां गताः वादपरित्यागेपि स्वधर्मस्थापनं नामुंचन्निति ॥ १७ ॥ ( रागेति ) रागद्वेषाभिनूतात्मानो मिथ्यात्वेनाऽनिडुताव्याप्तावादं कर्तुमसमर्थाआक्रोशेन शरणं यांति असन्यवचनानि दंमादिहननव्यापारंवा स्वीकुर्वंतीत्यर्थः । यथा टंकणाम्लेच्छविशेषाः परैरनिडुताः पर्वतं शरणंयांति ॥ १८ ॥

॥ टीका–अपिच ( सव्वाहीत्यादि ) ते गोशालकमतानुसारिणोदिगंबरावा सर्वानिरर्थानुगतानिर्युक्तिनिः सर्वैरेव हेतु दृष्टांतैः प्रमाणनूतैरशक्नुवंतः स्वपक्षे आत्मानं यापयितुं संस्थापयितुं ततस्तस्माद्युक्तिनिः प्रतिपादयितुं सामर्थ्याभावाद्वादं निराकृत्य सम्यग्हेतुदृष्टांतैर्योवादोजल्पस्तं परित्यज्य ते तीर्थिकानूयः पुनरपि वादपरित्यागे सत्यपि प्रगल्निता धृष्टतां गताइदमूचुः । तद्यथा । पुराणं मानवोधर्मः संगोवेदश्चिकित्सितं । आज्ञासिद्धानिचत्वारि न हंतव्यानि हेतुनिः ॥ १ ॥ अन्यच्च किमन्यया बहिरंगया युक्त्या ऽनुमानादिकया ऽत्र धर्मपरीक्षणे विधेये कर्तव्यमस्तियातः प्रत्यक्षएव बहुजनमसंमतत्वेन राजाद्याश्रयणाच्चायमेवास्मदनिप्रेतोधर्मः श्रेयान्नापरइत्येवं विवदंते ते षामिदमुत्तरं । नह्यत्र ज्ञानादिसाररहितेन बहुनापि प्रयोजनमस्तीति । युक्तं च । एरंमकठरासी जहायगोसीस चंदनपलस्स । मोल्लेन होज्ज सरिसो किंतियमेत्तो गणिज्जंतो ॥१॥ तहविगणणातिरेगो जहारासी सोनचंदनसरिछो ॥ तहनिविणाणमहो जणो विमोत्ते विसंवयति ॥२॥ एक्कोसचस्कुगोणविमूढापमाणं जेगइणचाणंति ॥ संसारगमणगुविलं णिउणस्सयबंधमोस्कस्स ॥ ३ ॥ इत्यादि ॥ १७ ॥ अपिच ( रायद्दोस्साइत्यादि ) रागश्च प्रीतिलक्षणोद्वेषश्च तद्विपरीतलक्षणस्ताभ्यामभिनूतआत्मायेषां परतीर्थिकानां ते । तथा मिथ्यात्वेन विपर्यस्तावबोधेनातत्वाऽध्यवसायरूपेणानिद्रुताव्याप्ताः सद्युक्तिनिर्वादं कर्तुमसमर्थाः क्रोधानुगाआक्रोशानसन्यवचनरूपांस्तथा दंममुष्ट्यादिनिश्च हननव्यापारं चांत्याऽश्रयंते । अस्मिन्नेवार्थे प्रतिपाद्ये दृष्टांतमाह । यथा टंकणाम्लेच्छविशेषाडुर्जयायदा परेण बलिना सानीकादिनानिद्रूयंते तदा ते नानाविधैरप्यायुधैर्योद्धुमसमर्थाः संतः पर्वतं शरणमाश्रयंत्येवं तेपि कुतीर्थिकावादपराजिताः क्रोधाद्युपहन

दृष्टयआक्रोशादिकं शरणमाश्रयंते । नच ते इदमाकलय्य प्रत्याक्रोष्टव्याः । तद्यथा ।
क्कोसहणणमारण धम्मभंसाणवाल सुलनाणं । लानंमन्नइधीरो जहुत्तराणंअनावंमि॥१

बहुगुणप्पगप्पाइं, कुज्जाअत्तसमाहिए ॥ जेणन्नेणोविरुझेज्जा, तेण तंतं समायरे ॥ १७ ॥ इमं च धम्म मादाय,कासवेण पवेइयं ॥ कुज्जा भिक्खू गिलाणस्स, अगिलाए समाहिए ॥ ७० ॥ संखाय पेसलं धम्मं, दिठ्ठि मं परिनिवुम्के ॥ उवसग्गे नियामित्ता,आमोक्खाए परिव्वएज्जा सित्तिबेमि ॥ ७१ ॥ इति ततीय अज्झयणस्स तईउ उद्देसो सम्मत्तो.

अर्थ—परंतु जे साधुठे ते तेमनी साथे आक्रोशादिक करे नही किंतु ज्यां बहुगुण के० घणागुणठे एटले प्रतिज्ञा हेतु दृष्टांत उपनय नैगम नय इत्यादिक प्पगप्पाइं के० प्रकल्पिये एवा मध्यस्थपणाना कारणने कुज्जा के० करे वली जे थकी अत्त के० आत्मा समाहिए के० समाधिवंत रहे एवा अनुष्ठान करे जेणन्नेणो विरुझेज्जा के० जे अनुष्ठानकस्वाथी अथवा जे वचन बोल्या थकी अन्यपुरुष विरोध नपामे तेवुं कार्य करे तेण के० तेमाटे तंतं के० ते ते विधि समायरे के० समाचरे ॥१७॥ एरीते परमत निराकरण करी उपसंहारे स्वमत स्थापन करतां कहेठे इमंके० ए पूर्वोक्त वचनरूप धम्म मादाय के० धर्मने ग्रहण करीने ते धर्म कासवेण पवेइयंके० काश्यप एटले श्रीमहावीर देवे प्रवेद्यो च शब्द थकी अन्य मतिनु निराकरण करीने प्रवेद्यो एटले कह्यो ते केवीरीते तो के भिक्खूके० साधु जे ठे ते गिलाणस्स के० गिलाननी कुज्जाके० वैयावच्च करे अगिलाए समाहिए के० परंतु अगिलान पणे करे जेम पोताने तथा गिलानने समाधि उत्पन्न थाय तेवीरीते वैयावच्च करे ॥७०॥ संखायपेसलंधम्मं के० ते पेसल एटले मनोहर एवा सर्वज्ञ प्रणीत श्रुत चारित्ररूप धर्मने सम्यक् प्रकारे जाणीने दिठ्ठिमं के० दृष्टीमंतसाचा तत्वनो जाण परिनिवुम्केके०परिनिवृत्त एटले क्रोधना उपशम थकी शीतलभूत थएलो एवो साधु तेने उवसग्गेके० उपसर्ग उदय आव्या ठता नियामित्ताके० तेने सहन करीने आमोक्खाय के० मोक्ष प्राप्तिसुधी परिव्वएज्जासि के० शुद्धो संयम पालतो थको प्रवर्त्ते. तिबेमिनो अर्थ पूर्ववत् जाणवो. ॥७१॥ इति श्रीद्वितीयसूत्रकृतांगे प्रथमश्रुतस्कंधे तृतीयाध्ययने उपसर्ग परिज्ञानाम स्तृतीयोद्देशकः समाप्तः ॥

॥ दीपिका—( बहुगुणेति ) । बहवोगुणाः स्वपक्षसिद्ध्यादयः प्रकल्पंते प्रादुर्भवंति येषु तानि बहुगुणप्रकल्पानि प्रतिज्ञाहेतुदृष्टांतोपनयनिगमनादीनि मध्ये स्ववचनानि वाऽनुष्ठानानि साधुर्वादकाले कुर्यात् । कीदृशः साधुः आत्मसमाधिकश्चित्तस्वास्थ्यवान् । तत्र

कुर्यात्साधुर्येन कृतेनान्यस्तीर्थिकोनविरुध्येत नविरोधं गछेत् । तेन तत्तदविरुद्धं समाचरेत् ॥१७॥ (इममिति) इमं वक्ष्यमाणं धर्ममादाय काश्यपेन श्रीवीरेण प्रवेदितं प्ररूपितं कुर्यान्भिक्षुः साधुग्लानस्य वैयावृत्त्यादिकं अग्लानतया यथाशक्ति समाहितः समाधिंप्राप्तः । यथा ग्लानस्य समाधिरुत्पद्यते स्वस्य वा योगानविषीदंति तथा वैयावृत्त्यादिकं विधेयमिति ॥ २० ॥ ( संखाएति ) । पेशलं श्रेष्ठं सर्वज्ञोदितं धर्मं संख्याय ज्ञात्वा दृष्टिमान् दर्शनोपेतः परिनिर्वृतोरागद्वेषत्यागाच्छीतलउपसर्गाननुकूलप्रतिकूलान् नियम्य निर्यंत्र्य आमोक्षाय सर्वकर्मक्षयाय परिव्रजेत्संयमोद्यतोनवेत् ससाधुरिति । ब्रवीमीति पूर्ववत् ॥२१॥ इति तृतीयाध्ययने तृतीयोद्देशकः समाप्तः ॥

---

॥ टीका–किंचान्यत् । ( बहुगुणेत्यादि ) । बहवोगुणाः स्वपक्षसिद्धिपरपक्षदोषोद्भावनादयोमाध्यस्थ्यादयोवा प्रकल्पंते प्रादुर्नवंत्यात्मनि येष्वनुष्ठानेषु तानि बहुगुणप्रकल्पानि प्रतिज्ञाहेतुदृष्टांतोपनयनिगमनादीनि माध्यस्थ्यवचनप्रकाराणि वा अनुष्ठानानि साधुर्वादकाले अन्यदा वा कुर्यात् विदध्यात् सएव विशिष्यते । आत्मनः समाधिश्चित्तस्वास्थ्यं यस्य सनवत्यात्मसमाधिकः। एतडुक्तं नवति । येन येनोपन्यस्तेन हेतुदृष्टांतादिना आत्मसमाधिः स्वपक्षसिद्धिलक्षणोमाध्यस्थवचनादिना वा परानुपघातलक्षणः समुत्पद्यते तत् तत् कुर्यादिति । तथा येनानुष्ठितेन वा नाषितेन वा अन्यतीर्थिकोधर्मश्रवणादौ वान्यः प्रवृत्तोन विरुध्येत नविरोधं गछेत् तेन पराविरोधकारणेन तत्तदविरुद्धमनुष्ठानं वाचनं वा समाचरेत् कुर्यादिति ॥ १७ ॥ तदेवं परमतं निराकृत्योपसंहारद्वारेण स्वमतस्थापनायाह । (इमंचेत्यादि ) । इममिति वक्ष्यमाणं पूर्वोक्तमूलोत्तरगुणरूपं चारित्राख्यं वा डुर्गतिधारणाद्धर्ममादायोपादाय आचार्योपदेशेन गृहीत्वा। किंनूतमिति। तमेव विशिनष्टि । काश्यपेन श्रीमन्महावीरवर्द्धमानस्वामिनोत्पन्नदिव्यज्ञानेन सदेवमनुजायां पर्षदि प्रकर्षेण यथावस्थितार्थनिरूपणद्वारेण वेदितं प्रवेदितं । चशब्दात्परमतं च निराकृत्य निक्षणशीलोनिक्षुर्ग्लानस्यापटोरपरस्य निक्षोर्वैयावृत्त्यादिकं कुर्यात् । कथं कुर्यादितदेव विशिनष्टि। स्वतोप्यग्लानतया यथाशक्ति समाहितः समाधिंप्राप्तइति । इदमुक्तं नवति । यथा यथात्मनः समाधिरुत्पद्यते तथा पिंमपातादिकं विधेयमिति ॥ २० ॥ किंकृत्वैतद्विधेयमितिदर्शयितुमाह । ( संखायेत्यादि ) । संख्याय ज्ञात्वा कं धर्मं सर्वज्ञप्रणीतं श्रुतचारित्राख्यनेदन्निन्नपेशलमिति । सुश्लिष्टं प्राणिनामहिंसादिप्रवृत्त्या प्रीतिकारणं। किंनूतमिति । दर्शनं दृष्टिः समुन्नूतपदार्थगतं सम्यग्दर्शनमित्यर्थः । सा विद्यते यस्याऽसौ दृष्टिमान् यथा व्यवस्थितपदार्थपरिछेदवानित्यर्थः । तथा परिनिर्वृतोरागद्वेषविरहाछांतीनूतस्तदेवं धर्मं पेशलं परिसंख्याय दृष्टिमान् परिनिर्वृतउपसर्गाननुकूलप्रतिकूलान्नियम्य सं

यम्य सोढा नोपसर्गैरुपसर्गितोऽसमंजसं विदध्यादित्येवमामोक्षायाशेषकर्मक्षयप्राप्ति वत्परिसमंतात् व्रजेत्संयमानुष्ठानोद्युक्तोजवेत् परिव्रजेदिति । परिसमाप्त्यर्थे । ब्रवीमि पूर्ववत् ॥ २१ ॥ उपसर्गपरिज्ञायास्तृतीयोद्देशकः समाप्तः ॥ ३ ॥

---

अथ तृतीयाध्ययने चतुर्थोद्देशकस्य प्रारंजः

आहं सुमहापुरिसा, पुव्विं तत्ततवोधणा ॥ उदयेण सिद्धिमाव न्ना, तत्र मंदोवसीयति ॥ १ ॥ अनुंजिया नमी विदेही, रामगुत्ते य नुंजिआ ॥ बाहुए उदगं जोच्चा, तहा तारागणेरिसी ॥ २ ॥

अर्थ–आहं सुमहा पुरिसाके० हवे ते परमार्थना अजाण एम कहेछेके महा पुरुष प्रधान पुरुष तारागणऋषि प्रमुख तेणे एवीरीते आहं एटले कह्युंछे शुंकह्युंछे तोके पुव्विंत तत्तके० पूर्वे कालनेविषे तपश्याना करनार तवोधणाके० तपरूप धनना धणी एवा अनेक ऋषीश्वर ते उदयेणके० उदक एटले शीतल पाणीनो परिजोग करता थका सिद्धिमाव न्ना के० सिद्धिने पाम्या तेरीतनुं अन्य तीर्थिनुं वचन सांजलीने तत्रमंदोवसी के०मंद अज्ञानी बापडा तत्र एटले तेहिज शीतलोदकने विषे राचे; पण प्राशुक ज जोग नकरे, एरीते संयमानुष्ठानने विषे सीदाय. ॥ १ ॥ हवे कोइक कुतीर्थि होयते धुने विप्रतारवाने अर्थे आवीरीते कहेके अनुंजिया के० अशनादिकने अण एवो नमीविदेही के० नमीराजा विदेह देशमां उत्पन्न थयेलो हतो, ते मुक्ति पोहोतो तथा अन्य तीर्थिज कहेछे के रामगुत्तेय जुंजिया के० रामगुप्त राजऋषीश्वर र जोगवतो थको मुक्ति पोहोतो, तथा बाहुए के० बाहुक ऋषीश्वर तहा के० त तारागणेरिसी के० तारागणनामा ऋषीश्वर ए वंने उदगंजोच्चा के० शीतल पाणीना परिजोग थकी सिद्धिने पाम्या ॥ २ ॥

---

॥ दीपिका–सांप्रतं चतुर्थआरन्यते । सच साधुना शीलरक्षणाय यत्नोविधीयतइत्य र्थवान् तस्य चेदमादिमं सूत्रं । (आहंसुइति) केचिदविज्ञाततत्वाआहुरुक्तवंतः । यथा म हापुरुषावल्कलचीरितारागणर्षिप्रमुखाः पूर्वं पूर्वकाले तप्तमनुष्ठितं तपएव धनं येषांते तप्ततपोधनाः पंचाग्न्यादिसाधकास्तएवंजूताउदकेन सचित्तोदकपरिजोगेण उपलक्ष णात्कंदमूलादिजोजिनः सिद्धिमापन्नाः सिद्धिं गताः । तत्रैवंजूतार्थाकर्णने मंदोमूर्खोऽ वसीदति संयमे सीदति शीतोदकादिपरिजोगे प्रवर्तते । तत्रैवं वेति तेषां तापसानां कुतश्चिज्जातिस्मरणादिप्रत्ययादाविर्जूतसम्यग्दर्शनानां संयमप्रतिपत्त्याऽगतज्ञानावरण

दिकर्मणां भरतादीनामिव मुक्तिः संजाता न तु शीतोदकपरिभोगादिति ॥ १ ॥ ( अभुंजिएति ) केचित्कुतीर्थिकाअथवा स्ववर्ग्याएवं शीतलविहारिण एवमाहुः। नमी राजा विदेहपुरवासिनोलोकावैदेहास्तेयस्य संति स वैदेही अशनादिकमभुक्त्वा सिद्धिं गतः। रामगुप्तश्च राजर्षिराहारादिकंभुक्त्वैव भुंजानएव सिद्धिं गतः । तथा बाहुकः शीतोदकादिपरिभोगं कृत्वा तथा तारागणनामा मुनिः शीतोदकादिपरिभोगात्सिद्धः ॥ २ ॥

---

॥टीका–उक्तस्तृतीयोद्देशकः सांप्रतं चतुर्थः समारभ्यते। अस्यचायमभिसंबंधः। इहानंतरोद्देशके अनुकूलप्रतिकूलोपसर्गाः प्रतिपादितास्तैश्च कदाचित्साधुः शीलात् प्रच्याव्येत तस्य च शीलस्खलितस्य प्रज्ञापनानेन प्रतिपाद्यते इति। अनेन संबंधेनायातस्यास्योद्देशकस्यादिमं सूत्रं (आहंसुइत्यादि)। के चन अविदितपरमार्थाआहुरुक्तवंतः। किंतदित्याह। यथा महापुरुषाःप्रधानपुरुषावल्कलचीरितारागणर्षिप्रभृतयः। पूर्वं पूर्वस्मिन् काले तप्तमनुष्ठितं तपएव धनं येषां ते तप्ततपोधनाः पंचाग्न्यादितपोविशेषेण निष्टप्तदेहास्तएवंभूताः शीतोदकपरिभोगेन उपलक्षणार्थत्वात् कंदमूलफलाद्युपभोगेन च सिद्धिमापन्नाः सिद्धिं गतास्तत्रैवंभूतार्थसमाकर्णने तदर्थसद्भावावेशात् मंदोऽज्ञोस्नानादित्याजितः प्राशुकोदकपरिभोगभग्नः संयमानुष्ठाने प्रविषीदति ।यदि वा तत्रैव शीतोदकपरिभोगे विषीदति लगति निमज्जतीति यावत् । न त्वसौ वराकएवमवधारयति यथा तेषां तापसादिव्रतानुष्ठायिनां कुतश्चिज्जातिस्मरणादिप्रत्ययादाविर्भूतसम्यग्दर्शनानां मौनींद्रभावसंयमप्रतिपत्त्या अपगतज्ञानावरणादिकर्मणां भरतादीनामिव मोक्षावाप्तिर्न तु शीतोदकपरिभोगादिति ॥ १ ॥ किंचान्यत् । ( अभुंजियाणमित्यादि ) केच न कुतीर्थिकाः साधुप्रतारणार्थमेवमूचुः । यदिवा स्ववर्ग्याः शीतलविहारिणएत द्वक्ष्यमाणमुक्तवंतस्तद्यथा निमीराजा विदेहोनाम जनपदस्तत्रभवावैदेहास्तन्निवासिनोलोकास्तेऽस्य संतीति वैदेही। सएवंभूतो निमीराजा अशनादिकमभुक्त्वा सिद्धिमुपगतस्तथा रामगुप्तश्च राजर्षिराहारादिकं भुक्त्वैव भुंजानएव सिद्धिं प्राप्तइति । तथा बाहुकः शीतोदकादिपरिभोगं कृत्वा तथा नारायणोनाममहर्षिः परिणतोदकादिपरिभोगात्सिद्धइति ॥ २ ॥

आसिले देवले चेव, दीवायण महारिसी, पारासरे दगं भोच्चा, बीयाणि हरियाणिया ॥ ३॥ एते पुव्वं महापुरिसा, आहिता इह संमता ॥ भोच्चा बीउदगं सिद्धा, इति मेयमणुस्सुअं ॥ ४ ॥

अर्थ–वली आसिले के० आसिल तथा देवले के० देवल चेव के० एमज दीवायणमहारिसी के० द्वीपायन महाऋषीश्वर अने पारासरे के० पाराशर ए सर्वे ऋषीउं उ

दगंजोच्चा के० शीतलपाणीने जोगवी तथा बीयाणि के० बीजकाय हरियाणिय के० हरिकायना परिजोग थकी सिद्ध थया ॥ ३ ॥ एते के० ए नेमीराज ऋषी प्रमुख महापुरिसाके० पूर्वकालनेविषे माहा पुरुष (आहिताके०)कह्या ठे ते इहके० आलोकने विषे संमता के० प्रसिद्धठे ते कुतीर्थिक अथवा साताशील स्वयूथिक एम कहे के ए सर्व बीउंदगं के० बीज सचेतपाणीने जोच्चा के० जोगवीने सिद्धा के० सिद्ध थया इतिके० एम मेयं के० ए अमे महाजारतादिक तथा पुराणोमांथी अणुस्सुयं के० सांजल्युं माटे अमे पण एवीज रीते मुक्ति साधशुं ॥ ४ ॥

---

॥ दीपिका–( असिलेति ) । असिलोनाम महर्षिस्तथा देवलोद्वैपायनः पराशराख्यइत्यादयः शीतोदकबीजहरितादिजोजिनःसिद्धाः ॥ ३ ॥ ( एतइति ) एते पूर्वोक्तामहापुरुषानम्यादयः पूर्वकाले त्रेताद्वापारादौ आख्याताः प्रसिद्धाः इहाप्यार्हतमते ऋषिजाषितादौ केचन संमता इत्येवं कुतीर्थिकाः प्रोचुः । एते सर्वेपि बीजोदकादिजोगात्सिद्धाइति मया जारतादौ पुराणे श्रुतं ॥ ४ ॥

---

॥टीका–अपिच । (असिलेइत्यादि) । असिलोनाम महर्षिर्देवलोद्वैपायनश्च तथा पराशराख्यइत्येवमादयः शीतोदकबीजहरितादिपरिजोगादेव सिद्धाइति श्रूयते ॥३॥ एतदेव दर्शयितुमाह । (एतेइत्यादि) एते पूर्वोक्तानम्यादयोमहर्षयः पूर्वमिति पूर्वस्मिन्काले त्रेताद्वापरादौ महापुरुषाइति प्रधानपुरुषाआसमंतात् ख्याताः प्रख्याताराजर्षित्वेनप्रसिद्धिमुपगताइहाप्याहितप्रवचने ऋषिजाषितादौ केचन संमताअजिप्रेताइत्येवं कुतीर्थिकाः स्वयूथ्यावा प्रोचुः । तद्यथा । एते सर्वेपि बीजोदकादिकं जुक्त्वा सिद्धाइत्येतन्मया जारतादौ पुराणे श्रुतं ॥ ४ ॥

तठ मंदा विसीअंति, वाहछिन्नाव गद्दजा ॥ पिठतो परिसप्पंति
पिठसप्पी च संजमे ॥ ५ ॥ इह मेगेउ जासंति, सातं सातेण वि
ऊती ॥ जे तठ आरिअं मग्गं, परमं च समाहिए ॥ ६ ॥

अर्थ–तठके० त्यां कुशास्त्र जे जारतपुराणादिक तेने सांजलवे करी तथा परिसह उपने थके मंदाविसीअंति के० कोइक मंद अज्ञानी चारित्र थकी सीदाय कोनीपेरे तोके वाहछिन्नावगद्दजा के० जेम जार थकी जागा एवा जे गर्द्दज ते मार्गमांज जार नाखीदेने नासीजाय अथवा पिठतोपरिसप्पंति के० पृष्ट सर्प्प एटले जग्न गति पुरुष संजमे के० संत्रमी पणे अग्न्यादिक उपद्रव उपने थके पिठसप्पिय के० नाशीजनार मनुष

नी पडवाडे दोडतो जाय परंतु अग्रगामि नथाय अग्नीमांहेज विनाश पामे तेम जे शीतल विहारी छे तेपण मुक्तिना अग्रगामी नथाय अनंतोकाल संसारमांहेज भमे ॥५॥ इहके० ए मोक्षमार्गे विचारवाने प्रस्तावे एगेउ के० कोइक शाक्यादिक अथवा स्वतीर्थि लोच प्रमुख कष्टे पीडया थका एम कहेके सातंके० ते जे मुक्तिना सुख छे ते सातेणके० सुखे करीज विज्जती के० थाय परंतु दुःख थकी सुख न थाय. यथा शालिबीजाच्छाल्यांकुरो, जायतेनयवांकुर इतिवचनात् माटे लोचादिक कष्ट थकी मुक्ति शीरीते थशे एवीरीते बोलीने जेके० जे कोइक शाक्यादिक तत्त्व के० त्यां मोक्षविचारणाने प्रस्तावे आरिय के० श्रीतीर्थंकर देव तेनो प्ररुप्यो एवो जे मग्गं के० मोक्षमार्ग तेने मूकी आपेछे, ते परमंचसमाहियं के० परम समाधिनो कारण जे ज्ञान दर्शन अने चारित्ररूपछे तेने त्यागीने घणो संसारमांहे परिभ्रमण करेछे. तेहिज देखाडेछे ॥ ६ ॥

॥ दीपिका-( तत्रेति ) तत्र कुमतश्रवणोपसर्गे मंदाविषीदंति संयमे सीदंति । यथा वाहेन भारेण छिन्नास्त्रुटितारासभाः सीदंति । कोर्थः । यथा रासभाभारपीडिता मार्गेएव निपतंति एवं ते संयमभारं त्यक्त्वा शीतलविहारिणः स्युः । यथा पीठसर्पिणो भग्नगमनतया अग्न्यादिभये उद्भ्रांतनयनाः पश्चान्न परिसर्पंति नाग्रगामिनोभवंति अपितु तत्रैवाग्न्यादिसंभ्रमे विनश्यंति । एवं तेपि शीतलविहारिणोन मोक्षगामिनः स्युः अपितु तत्रैव संसारे अनंतकालं तिष्ठंति ॥ ५ ॥ ( इहेति ) इह मोक्षविचारे एके शाक्यादयः स्वतीर्थ्यावा लोचादिपीडिताः। तुशब्दोविशेषणे । भाषंते । तथाहि। सातं सुखं सातेन सुखेन विद्यते स्यात् । यतउक्तं । सर्वाणि सत्वानि सुखे रतानि, सर्वाणि दुःखाच्च समुद्विजंति ॥ जीवेषु तस्मात्सुखमेव दद्यात् सुखप्रदानाल्लभते सुखानि ॥ १ ॥ इत्यात्मसुखान्मुक्तिसुखं स्यात् नतु लोचादिदुःखात् । यदुक्तं। मणुणं भोअणं भुच्चा, मणुणं सयणासणं ॥ मणुणंसि अगारंसि, मणुणं जायए मुणी ॥१ ॥ तथा । मृद्वी शय्या प्रातरुत्थाय सेव्या, भुक्तं मध्ये पानकं चापराह्णे ॥ द्राक्षाखंडं शर्करा चार्धरात्रे मोक्षश्चांते शाक्यपुत्रेण दृष्टइति । अतोमनोज्ञाद्दाहारादेश्चित्तस्वास्थ्यं ततः समाधिः सएव मुक्तिरिति । ततः सुखेन सुखावाप्तिर्न तु लोचादिक्लेशेनेति एवंये भाषंते तथा आर्यं जैनेंद्रमार्गं परमंच समाधिज्ञानदर्शनचारित्रात्मकं येत्यजंति ते सदा भवे भ्रमिष्यंतीति ॥६ ॥

॥टीका-एतदुपसंहारद्वारेण परिहरन्नाह। (तत्रेत्यादि) तत्र तस्मिन् कुश्रुत्युपसर्गोदये मंदाअज्ञानानाविधोपसाध्यं सिद्धिगमनमवधार्य विषीदंति संयमानुष्ठानेन पुनरेतद्वदंत्यज्ञाः।तद्यथा। येषां सिद्धिगमनमभूत् तेषां कुतश्चिन्निमित्तात् जातजातिस्मरणादिप्रत्ययानामवाप्तसम्यक्ज्ञानचारित्राणामेव वल्कलचीरिप्रभृतीनामिव सिद्धिगमनमभूत् । न पुनः क

दाचिदपि सर्वविरतिपरिणामभावलिंगमंतरेण शीतोदकबीजाद्युपभोगेन जीवोपमर्दप्रवृत्ते
ण कर्मक्षयोऽवाप्यते । विषीदने दृष्टांतमाह । वहनं वाहोजारो वहनं तेन भिन्नाः क्षे
तास्त्रुटितारासनाइव विषीदंति । यथा रासनागमनपथएव प्रोज्झितजारानिपतंति ए
वं ते प्रोज्य संयमनारं शीतलविहारिणोनवंति । दृष्टांतांतरमाह । यथा पृष्ठसर्पिणोजग्न
गतयोऽग्न्यादिसंभ्रमे सत्युद्भ्रांतनयनाः समाकुलाः प्रनष्टजनस्य पृष्ठतः पश्चात्परिसर्पं
ति नाग्रगामिनोनवंत्यपि तु तत्रैवाग्न्यादिसंभ्रमे विनश्यंत्येवं तेपि शीतलविहारिणो
मोक्षं प्रतिप्रवृत्ताअपि तु न मोक्षगतयोनवंत्यपि तु तस्मिन्नेव संसारे अनंतमपि कालं
यावदासतइति ॥ ५ ॥ मतांतरं निराकर्तुं पूर्वपक्षयितुमाह । ( इहमेगेइत्यादि ) । इहेति
मोक्षगमनप्रस्तावे एके शाक्यादयः स्वयूथ्यावा लोचादिनोपतप्ताः । तुशब्दः पूर्वस्मात् शी
तोदकापरिभोगाद्विशेषमाह । नाषंते ब्रुवते । मन्यंते च इति क्वचित्पाठः । किंतदित्याह । सातं
सुखं सातेन सुखेनैव विद्यते नवतीति । तथाच वक्तारोनवंति । सर्वाणि सत्वानि सुखे
रतानि सर्वाणि दुःखाच्च समुद्विजंति । तस्मात्सुखार्थीसुखमेव दद्यात् सुखप्रदाता लन
ते सुखानि॥१॥ युक्तिरप्येवमेव स्थिता । यतः कारणानुरूपं कार्यमुत्पद्यते। तद्यथा । शा
लिबीजाच्छाल्यंकूरोजायते न यवांकुरइत्येव प्रीत्यात्मसुखान्मुक्तिसुखमुपजायते न तुलो
चादिरूपात् दुःखादिति । तथाह्यागमे ऽप्येवमेव व्यवस्थितं ॥ मणुस्सं नोयणं नोच्चा मणु
स्सं सयणासणं। मणुस्संति अगारंसि मणुस्सं जायए मुणी ॥१॥ तथा मृ द्वी शय्याप्रातरुत्थाय
पेया, नुक्तं मध्ये पानकं चापराह्णे। द्राक्षाखंडं शर्करा चार्धरात्रे मोक्षश्चांते शाक्यपुत्रेण दृष्टः
॥१॥इत्यतोमनोज्ञाहारविहारादेश्चित्तस्वास्थ्यं ततः समाधिरुत्पद्यते समाधेश्च मुक्त्यवाप्ति
तः स्थितमेतत्सुखेनैव सुखावाप्तिर्न पुनः कदाचनापि लोचादिना कायक्लेशेन सुखावाप्तिरि
ति स्थितं । इत्येवं व्यामूढमतयोये केचन शाक्यादयस्तत्र तस्मिन्मोक्षमार्गप्रस्तावे स
मुपस्थिते आराक्षातः सर्वहेयधर्मेन्यइत्यार्योमार्गोजैनेंद्रशासनप्रतिपादितोमोक्षमार्ग
स्तं ये परिहरंति। तथा च। परमं च समाधिज्ञानदर्शनचारित्रात्मकं ये त्यजंति तेऽज्ञाः संसा
रांतर्वर्तिनः सदा नवंति । तथाहि । यत्तैरनिहितं कारणानुरूपं कार्यमिति तन्नायमेकां
तोयतः शृंगाच्छरोजायते गोमयाद्वृश्चिकोगोलोमाविलोमादिन्योदूर्वेति । यदपि मनोज्ञा
हारादिकमुपन्यस्तं सुखकारणत्वेन तदपि विषूचिकादिसंनवाद्व्यनिचारीति । अपिचेदं वै
षयिकं सुखं दुःखप्रकारहेतुत्वात् सुखानासतया सुखमेव न नवति । तदुक्तं । दुःखात्म
केषु विषयेषु सुखाभिमानः सौख्यात्मकेषु नियमादिषु दुःखबुद्धिः। उत्कीर्णवर्णवदपंक्तिरि
वान्यरूपा सारूप्यमेति विपरीतगतिप्रयोगात्॥१॥इति। कुतस्तत्परमानंदरूपमस्यात्यंतिकै
कांतिकस्य मोक्षसुखस्य कारणं नवति। यदपि लोचनूशयननिक्षाटनपरपरिनवक्षुत्पिपासा
दंशमशकादिकं दुःखकारणत्वेन नवतोपन्यस्तं तदप्यल्पसत्वानामपरमार्थदृशां महापु

रूपाणां तु स्वार्थाभ्युपगमप्रवृत्तानां परमार्थचिंतकानां महासत्वतया सर्वमेवैतत्सुखायैवे ति। तथाचोक्तं। तणसंथारनिविष्ठो विमुनिवरो भट्टरागमयमोहो ॥ जंपावइ मुत्तिसुहं कत्तो तंचक्कवट्टीवि॥१॥ तथा । दुष्कृतसंख्यया च महतां क्वांतं पदं वैरिणः कायस्याशुचिता विरागपदवी संवेगहेतुर्जरा ॥ सर्वत्यागमहोत्सवाय मरणं जातिः सुहृत्प्रीतये संपद्भिः परिपूरितं जगदिदं स्थानं विपत्तेः कुतइति ॥१॥ अपिचैकांतेन सुखेनैव सुखेऽभ्युपगम्यमाने विचित्रसंसाराभावः स्यात्तथा स्वर्गस्थानां नित्यसुखिनां पुनरपि सुखानुभूतेस्तत्रैवोत्पत्तिः स्यात्तथा नारकाणां च पुनर्दुःखानुभवात्तत्रैवोत्पत्तेर्न नानागत्या विचित्रता संसारस्य स्यान्नचैतत् दृष्टमिष्टं चेति ॥ ६ ॥

मा एयं अवमन्नंता, अप्पेणं लुंपहा बहुं ॥ एतस्स अमोरकाए, अयहारिव जूरह ॥ ७ ॥ पाणाइवाते वट्टंता, मुसावादे असंजता ॥ अदिन्नादाणे वट्टंता, मेहुणोय परिग्गहे ॥ ८ ॥

अर्थ-मा के० अहो दर्शनीउ, तमे एयं के० सुख थकी सुख थाय एवां वचने करी अवमन्नंता के० श्रीजिनेंद्रना मार्गने अवहिलता थका अप्पेणं के० अल्प विषयने अर्थे बहुं के० घणा एवांजे मोक्षना सुख तेने लुंपहा के० गमावोछो; एतस्स के० एवा असत्य पक्षने अमोरकाए के० न मूकवे करीने अयहारिव के० लोहवाहकनी पेरे जूरह के० झूरशो; जेम कोइक बे जण हता तेणे लोहनो भार उपाड्यो हतो. पछी मार्गे जता सुवर्ण दीठुं तेवारे एकजणे लोहनां भारने नाखी देइने अमुलक सुवर्ण वस्तु ग्रहण करी अत्यंत धनवंत थयो, अने बीजायें लोहनो भार नाखी दीधो नही, ते पछी झूरवा लागो. तेम तमे पण झूरशो. ए कथा सविस्तर श्रीरायप्रश्नि सूत्रमांहे त्यां थकी जोइ लेवी ॥ ७ ॥ पाणाइवातेवट्टंता के० प्राणातिपातने विषे वर्त्तता मुसावादे के० मृषावादने विषे वर्त्तता अदिन्नादाणेके० अदत्तादान तथा मेहुणेके० मैथुन च के० वली परिग्गहेके० परिग्रह एटलाने विषे वट्टंताके० वर्त्तता थका तमे असंजताके० असंयतिछो अल्प विषयसुखमां पड्या थका घणुं एवुं जे मोक्ष सुख तेनो विनाशकरोछो. ॥८॥

॥ दीपिका-( माएति ) एनं जैनमार्गं अवमन्यमानाः परिहरंतो ऽल्पेन सुखेन मा बहुं मोक्षसुखं लुंपथ विध्वंसयथ । तथा एतस्यासत्पक्षस्यामोक्षेपरित्यागे अयोहारीव (झूरहत्ति ) आत्मानं कदर्थयते । यथाऽयसोलोहस्याहर्ता ऽपांतराले रूप्यादिलाभेपि दूरमानीतमिति लोहं नोज्झितवान् पश्चादलाभे झूरितवान् पश्चात्तापं कृतवान् एवं यू

यमपि ॥ ७ ॥ ( पाणाइवेति ) यूयं प्राणातिपाते मृषावादे संयताः सं
ऽदत्तादाने मैथुने परिग्रहे वर्तमानाअल्पेन सुखेन बहु हारयथ ॥ ८ ॥

॥ टीका–अतोऽव्यपदिश्यते । ( माएयमित्यादि ) एनमार्य मार्ग जैनेंद्रप्रवचनं सम्यक् ज्ञानदर्शनचारित्रमोक्षमार्गप्रतिपादकं सुखं सुखेनैव विद्यते इत्यादिमोहेन मोहिताअवमन्यमानाः परिहरंतोऽल्पेन वैषयिकेण सुखेन माबहु परमार्थसुखं मोक्षाख्यं लुंपथ विध्वंसथ तथाहि । मनोज्ञाऽहारादिना कामोद्रेकस्तद्उद्रेकाच्च चित्तास्वास्थ्यं न पुनः समाधिरिति । अपि चैतस्यासत्पक्षाभ्युपगमस्यामोक्षे परित्यागे सति । ( आयो हारिवजूरहत्ति ) आत्मानं यूयं कदर्थयथ । यथैव केवलं यथावाऽयसो लोहस्याहर्ता अपांतराले रूप्यादिलाभे सत्यपि दूरमानितमिति कृत्वा नोज्झितवान् । पश्चात् स्वावस्थानावाप्तावल्पलाभे सति जूरितवान् पश्चात्तापं कृतवान् एवं भवंतोपि जूरयिष्यंतीति ॥७॥ पुनरपि सातेन सातमित्येवं वादिनां शाक्यानां दोषोद्भिावयिषयाह । (पाणाइवायेत्यादि) प्राणातिपाते मृषावादादत्तादानमैथुनपरिग्रहेषु वर्तमानाअसंयतायूयं वर्तमानसुखैषिणोल्पेन वैषयिकसुखाभासेन परमार्थिकमेकांतात्यंतिकं बहु मोक्षसुखं विलुंपथेति । किमिति । यतः पचनपाचनादिषु क्रियासु वर्तमानाः सावद्यानुष्ठानारंभतया प्राणातिपातमाचरथ । तथा येषां जीवानां शरीरोपभोगोभवद्भिः क्रियते तानि शरीराणि तत्स्वामिभिरदत्तानीत्यदत्तादानाचरणं । तथा गोमहिष्यजोष्ट्रादिपरिग्रहात्तन्मै... ति । तथा प्रव्रजितादयमित्येवमुच्चाय गृहस्थाचरणानुष्ठानान्मृषावादस्तथा धनधान्यद्विपदचतुष्पदादिपरिग्रहात्परिग्रहइति ॥ ८ ॥

एवमेगे उ पासत्था, पन्नवंति अणारिया ॥ इत्थीवसंगया बाला,
जिणसासणपरम्मुहा ॥ ९ ॥ जहा गंमं पिलागं वा, परिपीलेज्ज
मुहुत्तगं ॥ एवं विन्नवणित्थीसु, दोसो तत्थ कओसिआ ॥ १० ॥

अर्थ–वली परमतनो नापा दोष कही देखाडेछे. एव के० एरीते एगेउ के० कोइएक परतीर्थिक अथवा स्वतीर्थिक पासत्थाके० पासत्थादिक ते केवाछे तोके अणारियाके० अनार्य कर्मना करनार अणाचारि वली इत्थीवसंगया के० स्त्रीने वसे पड्या एटले स्त्रीनो परिसह जीतवाने असमर्थ तथा बाला के० अज्ञानी वली जिणसासण परम्मुहा के० जिनमार्ग थकी वपरांग ते पन्नवंति के० एम कहेछेके ॥ ९ ॥ जहा के० जेम गंमके० गूंवडुं पिलागंवा के० पाकुं थकुं तेने परि के० त्यांज पीलेज्ज के० पीलीने तेमांथी परु अथवा रुधीर काढी नाखवा थकी मुहुत्तगंके० मुहूर्त्तमात्रमां सुख थाय परंतु पीडा कांइ

पण न थाय एवं के० एरीते अंहीं पण विन्नवणिज्ञीसु के० प्रार्थना करती एवी स्त्रीनी साथे संबंध करवाथी दोसोतज्ञकउसिया के० त्यांपण क्यां थकीदोष आवशे अपितुं कांइज दोषनथी. ॥ १० ॥

॥ दीपिका–एवं पूर्वोक्त प्रकारेण एके बौद्धविशेषाः शैवविशेषावा पार्श्वस्थाः स्वयूथ्या वाऽवसन्नकुशीलादयोऽनार्याः स्त्रीवशंगताः प्रज्ञापयंति वदंति। यतस्तेषां वचनं। प्रियादर्शन मेवास्तु, किमन्यैर्दर्शनांतरैः ॥ प्राप्यते येन निर्वाणं, सरागेणापि चेतसा इति । ते किंनूताः जिनशासनपराङ्मुखाः ॥ ए ॥ ( जहेत्ति) ते एवमाहुः । यथा गंडं पिटकं पीडोपशमार्थं परिपीड्य रुधिरादिकं निर्गाल्य मुहूर्तमात्रं सुखिनः स्युर्नच दोषेणानुषज्यंते । एवं विज्ञा पनासु प्रार्थनीयासु स्त्रीषु दोषः कुतःस्यात् । तत्रकोर्थः । गंडपरिपीडनतुल्ये स्त्रीसंबंधे क दोषः स्यात् । तत्र दोषोयदि काचित्पीमा नवेन्न चेह् साकाप्यस्तीति ॥ १० ॥

॥ टीका–सांप्रतं मतांतरदूषणाय पूर्वपक्षयितुमाह् । ( एवमेगेइत्यादि ) तुशब्दः पूर्व स्माद्विशेषणार्थः । एवमिति वक्ष्यमाणया नीत्या यदि वा प्राक्तनएव श्लोकोत्रापि संबधनी यः । एवमिति । प्राणातिपातादिषु वर्तमानाएकइत्यादिबौद्धविशेषानीलपटादयोनाथ वादिकमंमलप्रविष्टावा शैवविशेषाः सदनुष्ठानात् पार्श्वे तिष्ठंतीति पार्श्वस्थाः स्वयूथ्यावा पार्श्वस्थावसन्नकुशीलादयः स्त्रीपरीषहपराजितास्तएवं प्रज्ञापयंति प्ररूपयंति । अना र्याः अनार्यकर्मकारित्वात्। तथाहि। ते वदंति। प्रियादर्शनमेवास्तु किमन्यैर्दर्शनांतरैः। प्रा प्यते येन निर्वाणं सरागेणापि चेतसा। किमित्येवं तेनिदधतीत्याह्।स्त्रीवशंगताः यतोयुवती नामाज्ञायां वर्तंते बालाअज्ञारागद्वेषोपहतचेतसइति । रागद्वेषजितोजिनास्तेषां शासन माज्ञा कषायमोहोपशमहेतुनूता तत्पराङ्मुखाः संसारन्निष्वंगिणोजैनमार्गविद्वेषिणएत द्वक्ष्यमाणमूचुरिति ॥ ए॥ यदूचुस्तदाह् (जहागंडमित्यादि) यथेत्युदाहरणोपन्यासार्थः। यथा येन प्रकारेण कश्चित् गंमी पुरुषोगंडं समुछितं पिटकं वा तज्जातीयकमेव तदा कृतोप शमनार्थं परिपीड्य पूयरुधिरादिकं निर्गाल्य मुहूर्तमात्रं सुखितोनवति न च दोषेणानुष ज्यते । एवमत्रापि स्त्रीविज्ञापनायां युवतिप्रार्थनायां रमणीसंबंधे गंमपरिपीमनकल्पे दोष स्तत्र कुतः स्यात् । न ह्येतावता क्लेदापगममात्रेण दोषोनवेदिति । स्यात्तत्र दोषोयदि काचि त्पीडा नवेत् ॥ १० ॥

जहा मंधादए नाम, थिमिअं नुंजती दगं ॥ एवं विन्नवणिज्ञीसु,
दोसो तज्ञ कउम्मिआ ॥११॥ जहा विहंगमा पिंगा, थिमिअं नुं
जती दगं ॥ एवं विन्नवणिज्ञीसु, दोसो तज्ञ कउसिआ ॥१२॥ ए

वमेगे उ पासत्था, मिछदिठी अणारिआ ॥ अझोववन्ना कामे
हिं, पूयणा इव तरुणए ॥ १३ ॥

अर्थ—वली दृष्टांत कहेछे. जहाके० जेम मंदादननामके० मेषो एवे नामे जनावर ते मितं के० जेरीते पाणी मोलाय नही एरीते भुंजतीदगं के० उदकनुं पान करे, पाणीने पण बाधा नथाय अने पोताने पण बाधा नकरे एवंके० एरीते विन्नव के० प्रार्थना करती स्त्री साथे संबंध करवा थकी दोसोतछकउसिया के० त्यांपण दो क्यां थकी थाय अपितु नज थाय. ॥११॥ जहा के० जेम विहंगमापिंगा के० एवेनामे पंखणी आकाशें उडती थकीज थिमिअंभुंजतीदगं के० निर्मलपाणीनुं एवं के० एरीते विन्नवणिछीसु के० अहींपण गर्नांतर करण पूर्वक पुत्रादिकने अर्थे रा द्वेष रहित प्रार्थती एवी स्त्रीनी साथे संग करतां थकां दोष क्यांथकी थाय ॥१२॥ हवे सूत्र कर्ता ते वादीउना दोष प्रगट करतो कहेछे. एवमेगेउपासछाके० ते पूर्वोक्त गुंवडा ना दृष्टांते करी मैथुनने निर्दोष मानता एवा कोइ एक परतीर्थिक तथा स्वयूथिक क जेणे स्त्री परिसह जित्यो नथी, ते सिथल विहारी केवा छे, तो के मिछदिठी रिया के० मिथ्यादृष्टी अनार्य कर्मना करनार अनाचारी अझोववन्नाकामेहिंके० गने विषे गृद्ध छता प्रवर्त्ते कोनीपेरे तोके पूयणाइवके० पुतना एटले फाकणनीपेरे फाकण न्हाना बालकने देखी गृद्ध थाय अथवा पुतना एटले गाफरीनीपेरे जेम पोताना तरुणए के० तरुण बालकने विषे गृद्ध थाय; एटले समस्त जीवोमांहे नने विषे गाफरीनो स्नेह आकरो दीपेछे ते माटे ए दृष्टांत कह्युं तेम पूर्वोक्त अना री पासछादिक पण कामनोगनेविषे गृद्ध थायछे. ॥ १३ ॥

॥ दीपिका—( जहेति ) यथा मंधादनोमेषः स्तिमितं अनालोडयाग्रतउदकं भुंक्ते स्यात्मानं प्रीणयति नचान्योपघातं कुर्यात् एवं स्त्रीसंबंधे न काचिदन्यस्य पीमा त्मनश्च प्रीणनमिति कुतस्तत्र दोषः ॥११॥ यथा पिंगाः कपिंजलाविहंगमाः प काशएव वर्तमानाः स्तिमितं निभृतमुदकं पिबंति एवमत्रापि पुत्राद्यर्थं स्त्रीसंबंधं कुर्वतो रक्तद्विष्टस्य पक्षिणइव कुतोदोषः। यदुक्तं ॥ धर्मार्थं पुत्रकामस्य स्वदारेष्वधिकारिणः ऋतुकालविधानेन दोषस्तत्र नविद्यतइति ॥१२॥ अथैवं वदतां परेषां दोषमाह। एवं प रोक्तैः पूर्वदृष्टांतैर्मैथुनं निर्दोषमितिमन्यमानाएके शाक्यादयः स्वयूथ्यावा पार्श्वस्थाद स्तथा मिथ्यादृष्टयोऽनार्याधर्मविरुद्धनाषिणोऽध्युपपन्नागृद्धाः कामेषु वा। यथा पूतना शाकिनी तरुणके बाले आसक्ता यदि वा पूतना गमुरिका स्वापत्ये आसक्ता। कथाचात्र केनापि सर्वपशूनामपत्यानि निरुदके कूपेऽपत्यस्नेहपरीक्षार्थं क्षिप्तानि। तत्र चान्यामात

रः स्वापत्यशब्दाकर्णनेऽस्मिन्नपि कूपतटस्थाएव रुदंति जरत्री त्वअपत्यातिस्नेहांधा अपायमनपेक्ष्य तत्रैवात्मानं क्षिप्तवतीत्यतोन्यपशुन्योगमुरिका स्वापत्ये नृशमासक्ता एवं तेपि कामासक्ताः ॥ १३ ॥

---

॥ टीका–दृष्टांतेन दर्शयति । ( जहेत्यादि ) यथेत्ययमुदाहरणोपन्यासार्थः । मंधाद नइति मेषः । नामशब्दः संजावनायां । यथा मेषस्तिमितमनाजोडयन्नुदकं पिबत्यात्मानं प्रीणयति नच तथान्येषां किंच नोपघातं विधत्ते।एवमत्रापि स्त्रीसंबंधे न काचिदन्यस्य पीडा आत्मनश्च प्रीणनमतः कुतस्तत्र दोषः स्यादिति ॥ ११ ॥ अस्मिन्नेवानुपघातार्थे दृष्टांतबहुत्वख्यापनार्थं दृष्टांतांतरमाह। (जहाविहंगमाइत्यादि) यथा येन प्रकारेण विहायसा गच्छतीति विहंगमा पक्षिणी(पिंगेति)कपिंजला साकाशएव वर्तमाना स्तिमितं निजृतमुदकमापिबत्येवमत्रापि दर्जप्रदानपूर्विकया क्रियया अरक्ताद्विष्टस्य पुत्राद्यर्थं स्त्रीसंबंधं कुर्वतोपि कपिंजलायाइव न तस्य दोषइति । सांप्रतमेतेषां गंडपीडनतुल्यं स्त्रीपरिज्ञोगं मन्यमानानां तथैमकोदकपानसदृशं परपीडाऽनुत्पादकत्वेन परात्मनोश्च सुखोत्पादकत्वेन किल मैथुनं जायतइत्यध्यवसायिनां तथा कपिंजलोदकपानं यथा तन्नागोदकासंस्पर्शेन किल नवत्येव मरक्तद्विष्टतया दर्जाद्युत्तारणात् स्त्रीगात्रस्पर्शेन पुत्रार्थं न कामार्थं । ऋतुकालाभिगामितया शास्त्रोक्तविधानेन मैथुनेपि न दोषानुषंगः॥ तथाचोचुस्ते । धर्मार्थं पुत्रकामस्य स्वदारेष्वधिकारिणः । ऋतुकाले विधानेन दोषस्तत्र न विद्यते इति । एवमुदासीनत्वेन व्यवस्थितानां दृष्टांतेनैव निर्युक्तिकारो गाथात्रयेणोत्तरदानायाह । (जहणामेइत्यादि) जहणाममंमलग्गे णसिरं णकस्सइमणुस्सो ॥ अवेक्तपराहुत्तो किं नाम ततो णचे पेज्ञा ॥ ५३ ॥ जहणा विसगंडूसं, कोतीघेत्तूणनामतुण्हिक्को ॥ अस्सेणअदीसंतो, किं नाम ततो नवमरेक्का ॥ ५४॥ जह नाम सिरिघराउ, कोइरयणेणणामघेत्तूणं । अवेक्तपराहुत्तो किंणामततो न घेपेज्ञा॥५५॥यथा नामकश्चिन्मंमलाग्रेण कस्यचिच्छिरश्छित्वा पराङ्मुखस्तिष्ठेत् । किमेतावतोदासीनजावावलंबनेन न गृह्येत नापराधी जवेत्।तथा यथा कश्चिद्विषगंडूषं गृहीत्वा पीत्वानाम तूर्ष्णीजावं जजेदन्येन वा संदृश्यमानोसौ किं नाम ततोसावन्यादर्शनात् नम्रियेत।तथा यथा कश्चिच्छ्रीगृहाज्ञांडागाराद्रत्नानि महार्घाणि गृहीत्वा पराङ्मुखस्तिष्ठेत् किमेतावतासौ न गृह्येतेति। अत्र च यथा कश्चित शवतया अज्ञतया वा शिरश्छेदे विषगंडूषरत्नापहाराख्ये सत्यपि दोषत्रये माध्यस्थ्यमवलंबेत। न च तस्य तदवलंबनेपि निर्दोषतेति। एवमत्राप्यवश्यंजाविरागकार्यमैथुने सर्वदोषास्पदे संसारवर्द्धके कुतोनिर्दोषतेति । तथा चोक्तं । प्राणिनां बाधकं चैतच्छास्त्रेगीतं महर्षिजिः ॥ नजिकातप्तकणकप्रवेशज्ञा ततस्तथा ॥ १ ॥ मूलं चैतदधर्मस्य जवजावप्रवर्धनं॥तस्माद्विषान्नवत्त्याज्यमिदं पापमनिच्छतेति निर्युक्तिगाथा

त्रयतात्पर्यार्थः ॥ १२ ॥ सांप्रतं सूत्रकारउपसंहारव्याजेन गंडपीडनादिदृष्टांतवादिनो दोषोद्भावनायाह । (एवमेगेइत्यादि)। एवमिति गंडपीडनादिदृष्टांतबलेन निर्दोषमेमिति मन्यमानाएके स्त्रीपरीषहपराजिताः सदनुष्ठानात्पार्श्वे तिष्ठंतीति पार्श्वस्थाः नाथवादिकमंडलचारिणः। तुशब्दात् स्वयूथ्यावा तथा विपरीता तत्त्वाग्राहिणी दृष्टिर्दर्शनं येषां तथा आराद्दूरे याता गताः सर्वहेयधर्मेभ्यइत्यार्याः नआर्या अनार्याः । धर्मविरुद्धानुष्ठानात्तएवं विधाअध्युपपन्नागृध्नवइच्छामदनरूपेषु कामेषु कामैर्वाकरणभूतैः सावद्यानुष्ठाने॰॥
अत्र लौकिकं दृष्टांतमाह । यथावा पूतना डाकिनी तरुणके स्तनंधयेऽध्युपपन्ना । एवं तेप्यनार्याः कामेष्विति।यदि वा(पूयणत्ति)गड्डुरिका आत्मीयेऽपत्येऽध्युपपन्ना एवं तेपीति।कथानकंचात्र । यथा किल सर्वपशूनामपत्यानि निरुदके कूपेऽपत्यस्नेहपरीक्षार्थं क्षिप्तानि तत्र चापरामातरः स्वकीयस्तनंधयशब्दाकर्णनेपि कूपतटस्थारुदंत्यस्तिष्ठंति । उरभ्रीत्वपत्यातिस्नेहेनांधा अपायमनपेक्ष्य तत्रैवात्मानं क्षिप्तवतीत्यतोऽपरपशुभ्यः स्वापत्येऽध्युपपन्नेति॥

अणागयमपस्संता, पच्चुप्पन्नगवेसगा ॥ ते पच्छा परितप्पंति, खीणे आउंमि जोव्वणे ॥ १४ ॥ जेहिं काले परिक्कंतं, नपच्छा परितप्पए ॥ ते धीरा बंधणुम्मुक्का, नाव कंखंति जीविअं ॥ १५ ॥

अर्थ—हवे ते काम गृद्धना दोष कहेछे. ते काम भोग थकी जे निवृत्या नथी तेने अणागय के॰ आगामिक काले नरकादिक दुःख उत्पन्न थाय एवुं अपस्संता के॰ अण देखता थका अने पच्चुप्पन्नगवेसगाके॰ प्रत्युत्पन्न जे वर्तमान विषय सुख तेने गवेषताएनेज रुडुंकरी मानता थका रहेछे तेपच्छाके॰ तेपछी खीणआउंमिजोव्वणेके॰ जेवारे आयुष्य क्षीण थाय, अने यौवन जतुं रहे तेवारे परितप्पंति के॰ पश्चात्ताप करे; अने कहेके अमे एवा अनाचार शावास्ते कस्या? ॥ १४ ॥ जेहिं के॰ जे महापुरुषे कालेके॰ काल प्रस्तावे धर्मनेविषे परिक्कंतं के॰ पराक्रम कस्युं. नपच्छापरितप्पए के॰ ते महापुरुष पछी वृद्धावस्थायें तथा मरणावसरे पश्चात्तापकरे नही; ते धीराबंधणुम्मुक्का के॰ ते धैर्यवंत पुरुष बंधण थकी मूकाणा नावकंखंतिजीविअंके॰ असंयमे जीवितव्यनी आकांक्षाकरता नथी अथवा जीवितव्य मरणने विषे निस्पृहि थका वर्तेछे. ॥ १५ ॥

---

॥ दीपिका—तेषां दोषमाह ( अणागयमित्यादि )। अनागतं नरकादिदुःखमपश्यंतः प्रत्युत्पन्नं वर्तमानमेव विषयसुखाभासमन्वेषयंतः पश्यंतः पश्चात्क्षीणे स्वायुषि यौवने वा गते परितप्यंति पश्चात्तापं कुर्वंति । यदुक्तं । हतं मुष्टिभिराकाशं तुषाणां कंडनं कृतं। यन्मया प्राप्य मानुष्यं सदर्थे नादरः कृतः ॥ १ ॥ तथा । विहवावलेवनडिएहिं । जाइ

कीरंतिजोव्वणमएण ॥ वयपरिणामेसरिआ । इंताइंहि अपखुडुक्कंति इति ॥१४॥ (जेहिं इत्यादि) यैरात्महितैः कालेऽवसरे पराक्रांतं संयमोद्यमः कृतस्ते पश्चान्न परितप्यंते । एकवचनंसूत्रे छांदसत्वात् । ते वीरास्तपश्चरणोद्यतावंधनात्कर्मणोन मुक्ताअसंयमजीवितं नावकांक्षंतिने छंति । जिविते मरणे वा निस्पृहाः स्युरित्यर्थः ॥ १५ ॥

---

॥टीका–एवं तेपि कामान्निष्वंगिणांदोषमाविष्कुर्वन्नाह॥(अणागयमित्यादि)अनागतमेष्य त्कामानिवृत्तानां नरकादियातनास्थानेषु महत् डुःखमपश्यंतोऽपर्यालोचयंतस्तथा प्रत्युत्पन्नं वर्तमानमेव वैषयिकं सुखान्नासमन्वेषयंतोमृगयमाणानानाविधैरुपायैर्भोगान्प्रार्थयंतस्ते पश्चात् क्षीणे स्वायुषि जातसंवेगायौवने वा अपगते परितप्यंते शोचयंते पश्चात्तापं विदधति । उक्तं च । हतंमुष्टिभिराकाशं तुषाणां कंडनं कृतं । यन्मया प्राप्य मानुष्यं सदर्थे नादरः कृतः ॥१॥ तथा । विहवावलेवनम्डिएहिं । जाइंकीरंतिजोव्वणमएण॥वयपरिणामे सरियाइंताइंहिअपखु डुक्कंति ॥१॥१४॥ येतूत्तमसत्वतया अनागतमेव तपश्चरणादावुद्यमं विदधति न ते पश्चाच्छोचंतीति तद्दर्शयितुमाह । (जेहिंकाले इत्यादि) यैरात्महितकर्तृभिः काले धर्मार्जनावसरे पराक्रांतमिंद्रियकषायपराजयाद्युद्यमोविहितोन ते पश्चान्मरणकाले वृद्धावस्थायां वा परितप्यंते न शोकाकुलान्नवंति । एकवचननिर्देशस्तु सौत्रश्छांदसत्वादिति । धर्मार्जनकालस्तु विवेकिनां प्रायशः सर्वएव तस्मात्सएव प्रधानपुरुषार्थः प्रधानएव च प्रायशः क्रियमाणोघटां प्रांचति । ततश्चायं बाल्यात्प्रनृत्यकृतविषयासंगतयाकृततपःश्चरणास्ते धीराः कर्मविदारणसहिष्णवोबंधनेन स्नेहात्मकेन कर्मणा चोत्प्राबल्येन मुक्तानावकांक्षंति असंयमजीवितं यदि वा जीविते मरणे वानिस्पृहाः संयमोद्यममतयोन्नवंतीति ॥ १५ ॥

जहा नई वेयरणी, डुत्तरा इह संमता ॥ एवं लोगंसि नारीउ,
डुत्तरा अमईमया ॥ १६ ॥ जेहिं नारीणसंजोगा, पूयणा पिठ
तोकता ॥ सव्वमेयंनिराकिच्चा, तेठिया सुसमाहिए ॥ १७ ॥

अर्थ–जहानईवेयरणी के० जेम नदी वेतरणी जेनेते डुत्तराइहसंमता के० सर्वनदीओमां तरवी डुर्लनछे एवात लोक प्रसिद्धछे एवंलोगंसिनारीउ के० एरीते लोकमांहे स्त्रीउजेने तेपण डुत्तराअमईमया के० अमतिवंत निरविवेकी पुरुषने अपार डुस्तर डुर्लंघनीय जाणवी ॥ १६ ॥ एवुं जाणीने जे हितकारी वातने ते कहेछे जेहिं के० जे पुरुषे नारीणसंजोगा के० स्त्री संबंधी संयोगना जे विपाक तेने कडवा जाणीने स्त्रीना संयोग छांमीदीधा वली पूयणापिठतोकता के० तेस्त्रीना संयोगने अर्थे जे पोताना शरीरनी पूजा विनूषाते पण जेणे उपरांठी कीधी एटले मूकीदीधी. सव्वमेयंनिराकिच्चा

के० ते पुरुषे एसर्व स्त्रीसंगादिक तथा क्षुधा तृषादिक अनुकूल प्रतिकूल उपसर्गना गण एटले समूह तेने निराकरीने जे महापुरुष संसेवित मार्गे प्रवर्त्ते ते॰ हिए के० तेपुरुष संवररूप समाधिने विषे स्थित जाणवा. ॥ १७ ॥

॥ दीपिका–यथा वैतरणी नदी सर्वनदीनां मध्ये दुस्तरा दुर्लंघ्या इह लोके सम्मता। एवं लोके नार्योऽमतिमता निर्विवेकेन नरेण दुस्तराः। यदुक्तं। सन्मार्गे तावदास्ते प्रजवति पुरुषस्तावदेवेंद्रियाणां लज्जां तावद्विधत्ते विनयमपि समालंबते तावदेव। भ्रूचापाक्षेपमुक्ताः श्रवणपथजुषोनीलपक्ष्माणएते यावल्लीलावतीनां न हृदि धृतिमुषो दृष्टिबाणाः पतंति इति ॥ १६ ॥ यैरुत्तमैर्नारीणां संयोगास्तत्संयोगार्थमेव वस्त्रालंकारादिभिरात्मनः पूजनाः कामविभूषाः पृष्ठतः कृतास्त्यक्तास्ते महापुरुषाः सर्वमेतत्स्त्रीप्रसंगादिकं निराकृत्य सुस माधिना चित्तस्वास्थ्येन स्थिताः ॥ १७ ॥

॥ टीका–अन्यच्च (जहाइत्यादि) यथेत्युदाहरणोपन्यासार्थः। यथा वैतरणी नदीनां म ध्येऽत्यंतवेगवाहित्वात् विषमतटत्वाच्च दुस्तरा दुर्लंघ्या एवमस्मिन्नपि लोके नार्योऽमति मता निर्विवेकेन हीनसत्वेन दुःखेनोत्तीर्यंते। तथाहि। ताहावभावैः कृतविद्यानपि स्वीकु र्वंति। तथाचोक्तं। सन्मार्गे तावदास्ते प्रजवति पुरुषस्तावदेवेंद्रियाणां, लज्जां तावद्विधत्ते वि नयमपि समालंबते तावदेव ॥ भ्रूचापाक्षेपमुक्ताः श्रवणपथजुषोनीलपक्ष्माणएते यावल्ली लावतीनां न यदि धृतिमुषो दृष्टिबाणाः पतंति। तदेवं वैतरणीनदीवत् दुस्तरानार्योभवंतीति ॥ १६ ॥ अपिच। (जेहींत्यादि। यैरुत्तमसत्वैः स्त्रीसंगविपाकवेदिभिः पर्यंतकटवोनारी संयोगाः परित्यक्तास्तथा तत्संगार्थमेव वस्त्रालंकारमाल्यादिभिरात्मनः पूजनाकामविभूषा पृष्ठतः कृता परित्यक्तेत्यर्थः। सर्वमेतत्स्त्रीप्रसंगादिकं क्षुत्पिपासादिप्रतिकूलोपसर्गकदंबकं च निराकृत्य ये महापुरुषसेवितपंथानं प्रति प्रवृत्तास्ते सुसमाधिना स्वस्थचित्तवृत्तिरूपेण व्यवस्थितानोपसर्गैरनुकूलप्रतिकूलरूपैः प्रक्षोभ्यंते। अन्येतु विषयाभिष्वंगिणः रूयादिप रीषहपराजिताअंगारोपरिपतितमीनवद्रागाग्निना दह्यमानाअसमाधिना तिष्ठंतीति ॥१७॥

एते उग्घं तरिस्संति, समुद्दं ववहारिणो ॥ जत्र पाणा विसन्ना सि, किच्चंती सयकम्मणा ॥ १८ ॥ तंच भिक्खू परिन्नाय, सुव्वते समिते चरे ॥ मुसावायं च वज्जिज्जा, दिन्नादाणं च वोसिरे ॥१९॥

अर्थ–एतेके० ए पूर्वोक्त परिसहना जीपणहार ते उग्घंके० उघसंसारने तरिस्संतिके० तर शे समुद्दंववहारिणोके० समुद्रवत; एटले जेम व्यवहारिया समुद्रने नाव वडे तरेछे तेनीपरे जाणीलेवुं जत्थके० जे संसार समुद्रने विषे पाणाविके० प्राणी एटले जीव ते सन्नातिके०

खुता थका सयकम्मणाके० पोताना करेला पापकर्मे करी असातावेदनीयरूपे किच्चंती के० पीडायछे ॥ १७ ॥ हवे उपदेश कहेछे तंचनिक्खू के० ते पूर्वोक्त चारित्रिउ परिन्नायके० हेय उपादेय स्वरूप जाणीने सुव्वते के० नला व्रतनो पालक समितेचरे के० पांच समिते समितो एवो थको विचरे अने मुसावायंच वज्जिज्जा के० मृषावादने वर्जे तथा दिन्नादाणंचवोसिरे के० अदत्तादान एटले चोरी थकी वोसिरे एटले चोरीनुं त्यागकरे, एम अनुक्रमे मैथुन तथा परिग्रहने पण डांमे. ॥ १९ ॥

॥ दीपिका—एतेस्त्रीपरीषहजेतारउंघं संसारं तरिष्यंति । यथा व्यवहारिणः सांयात्रिकाः समुडं तरंति । यत्र नवौघे प्राणिनोविषयसंगैर्विषण्णाः संतः कृत्यंते पीडयंते स्वकर्मणा ॥ १७ ॥ तदेतत्प्रागुक्तं निक्षुः परिज्ञायज्ञात्वा सुव्रतः शोननव्रतयुक्तः समितः पंचसमितिनिश्चरेत् संयमानुष्ठानं कुर्यात् तथामृषावादं वर्जयेददत्तादानंच व्युत्सृजोत् त्यजेत् । आदिशब्दान्मैथुनपरिग्रहादिच त्यजेत ॥ १९ ॥

॥ टीका—स्त्र्यादिपरीषहपराजयस्य फलं दर्शयितुमाह ।(एतेइत्यादि) यएते अनंतरोक्ता अनुकूलप्रतिकूलोपसर्गजेतारएते सर्वे उघंसंसारं डुस्तरमपितरिष्यंति। डुर्ष्यांघदृष्टांतमाह । समुडंलवणसागरमिव व्यवहारिणःसांयात्रिकायानपात्रेण तरंत्येवं नवौघमपि संसारसंयमयानपात्रेण यतयस्तरिष्यंति।तथा तीर्णास्तरंतिचेति।नवौघमेव विशिनष्टि।नवौघे संसारसागरेप्राणाःप्राणिनःस्त्रीविषयसंगाद्विषण्णाःसंतःकृत्यंते पीड्यंते स्वकृतेनानुष्ठितेन पापेनकर्मणा असद्वेदनीयोदयरूपेणेति ॥१७॥ सांप्रतमुपसंहारव्याजेनोपदेशांतरविधित्सयाह । ( तंच निरकूइत्यादि ) । तदेतद्यथा प्रागुक्तं । यथा वैतरणीनदीवत् डुस्तरानार्योघैः परित्यक्तास्ते समाधिस्थाः संसारं तरंति स्त्रीसंगिनश्च संसारांतर्गताः स्वकृतकर्मणा कृत्यंतइति । तदेतत्सर्वं निक्षणशीलोनिक्षुः परिज्ञाय हेयोपादेयतया बुध्वा शोननानि व्रतान्यस्य सुव्रतः पंचनिः समितिनिः समितइत्यनेनोत्तरगुणावेदनं कृतमित्येवंनूतश्चरेत् संयमानुष्ठानं विदध्यात् तथा मृषावादमसद्भूतार्थनाषणं विशेषेण वर्जयेत्तथा अदत्तादानं च व्युत्सृजेद्दंतशोधनमात्रमप्यदत्तं न गृह्णीयात् । आदिग्रहणान्मैथुनादेः परिग्रहइति । तच्चमैथुनादिकं यावज्जीवमात्महितं मन्यमानः परिहरेत् ॥ १९ ॥

उड्ढमहे तिरियं वा,जे केई तस थावरा ॥ सव्वछ विरतिं कुज्जा, संति निव्वाणमाहियं ॥२०॥ इमं च धम्ममादाय,कासवेण पवेदितं॥ कुज्जा निक्खू गिलाणस्स, अगिलाए समाहिए ॥२१॥ संखाय

पेसलं धम्मं दिठिमं परिनिवुडे ॥ उवसग्गे हियासित्ता, आमो क्खाए परिव्वएज्जा सितिबेमि ॥ २२ ॥ इति श्री उवसग्गपरिन्ना ए तइयं अझयणं सम्मत्तं ॥.

अर्थ—हवे बीजा सर्वव्रत दयानी वाड रूपछे तेकारणे अहिंसाने विशेष दीपावेछे उड्ढं के० उंचो अहे के० अधो एटले नीचो तिरियं के० तीर्छो वा के० अथवा एटले सर्व लोकमांहे क्षेत्रथी प्राणातिपात कह्युं हवे द्रव्यप्राणातिपात कहेछे. जेकेईतसथावरा के० ए सर्व लोकमांहे जेकांइ त्रस अने स्थावर जीवछे सवछविरतिंकुज्जा के० तेनेविषे सर्व प्रकारे एटले करण करावण अने अनुमतियेंकरी सर्वत्रकालें विरतिपणुं करे एटले सर्व जीवोनी दयानुं पालवुं तेने संतिनिव्वाण माहियं के० ते शांति एटले कर्म दाहनी उप शम करनार कहिये तथा एनेज निरवाण एटले मोक्षपदमांपण आहितं एटले कह्युंछे.॥२०॥ हवे अध्ययननो अर्थ उपसंहरतो कहेछे. इमंच धम्ममादाय के० एम श्रुत चारित्र रूप धर्मने ग्रहण करीने ते धर्म कासवेणप्पवेदितं के० श्रीमहावीर स्वामिये प्रकाश्यो ते मार्ग आदरीने भिक्खू के० साधु ते गिलाणस्स के० गिलानने विषे वैयावच्चने कुज्जा के० करे ते केवो थको वैयावच्च करे तो के अगिलाए समाहिए के० अगिलाणपणे आत्माने समाधिमान थको जे साधु वैयावच्च करेछे तेने धन्यछे एवी समाधि धारण करतो थको वैयावृत करे ॥ २१ ॥ संखायके० सम्यक् प्रकारे जाणीने एटले जातिस्म रणादिके अथवा अन्यपासेथी सांभलीने पेसलं के० रूडो एवो धम्मं के० केवलीनुं भा प्योजे धर्म तेने दिठिमं के० सम्यक्दृष्टी जीव परिनिवुडे के० कषायने उपशमावी शीत लीभूत थको उवसग्गेहियासित्ता के० अनुकूल प्रतिकूल उपसर्गने अहिआसीने आमो क्खाए के० ज्यांसुधी मोक्षे जाय त्यांसुधी परिव्वएज्जासिके० सुधो संयम पाले तिबेमिनो अर्थ पूर्ववत् जाणवो ॥२२॥ ए उपसर्ग परिज्ञानामे त्रीजाध्ययननुं अर्थ समाप्त थयुं॥

---

॥ दीपिका—ऊर्ध्वमधः ये केचित् त्रसाः स्थावराः प्राणिनस्तेषु सर्वत्र कालेऽवस्थासु च विरतिं कुर्यात् यस्माच्छांतिनिर्वाणं कर्म दाहोपशमः शांतिस्तद्रूपं निर्वाणं मोक्षपदं आ ख्यातं कथितं यतोविरतेर्मोक्षोभवतीति ॥ २० ॥ इमं चारित्ररूपं धर्ममादाय गृहीत्वा काश्यपेन श्रीवीरेण प्रवेदितमाख्यातं ग्लानस्य साधोर्वैयावृत्तं कुर्यात् भिक्षुः। कथं।अग्लान तया यथाशक्ति समाहितः समाधिं प्राप्तः यथाग्लानस्य समाधिरुत्पद्यतेः स्वस्यच योगान विषीदंति यथा वैयावृत्त्यादिकं विधेयमिति ॥२१॥ पेशलं मोक्षप्रदं धर्मं संख्याय ज्ञात्वा दृष्टिमान् सम्यग्दर्शनी परिनिर्वृतः शांतः उपसर्गाननुकूलप्रतिकूलान् नियम्य नियंत्र्य

श्रामोक्षाय मोक्षार्थं परिव्रजेत् संयमेचरेदिति ब्रवीमीति पूर्ववत् ॥ २२ ॥ इतितृतीयाध्ययने चतुर्थउद्देशकः समाप्तः ॥ ४ ॥

॥ टीका–अपरिव्रतानामहिंसायावृत्तिकल्पत्वात् तत्प्राधान्यख्यापनार्थमाह ( उड्डमहे इत्यादि) ऊर्ध्वमधस्तिर्यक् चेत्यनेन क्षेत्रप्राणातिपातोगृहीतः। तत्रच ये केचन त्रसंतीति त्रसाद्वित्रिचतुःपंचेंद्रियाः पर्याप्तापर्याप्तकनेदनिन्नास्तथा तिष्ठंतीति स्थावराः पृथिव्यप्तेजोवायुवनस्पतयः सूक्ष्मबादरपर्याप्तकापर्याप्तकनेदनिन्नाइत्यनेन च द्रव्यप्राणातिपातोगृहीतः। सर्वत्र काले सर्वास्ववस्थास्वित्यनेनापि कालनावनेदनिन्नः प्राणातिपातउपात्तोऽद्रष्टव्यः। तदेवं चतुर्दशस्वपि जीवस्थानेषु कृतकारितानुमतिनिर्मनोवाक्कायैः प्राणातिपातविरतिं कुर्यादित्यनेन पादोनेनापि श्लोकद्वयेन प्राणातिपातविरत्यादयोमूलगुणाः ख्यापिताः। सांप्रतमेतेषां सर्वेषामेव मूलोत्तरगुणानां फलोद्देशेनाह । शांतिरिति कर्मदाहोपशमस्तदेवच निर्वाणं मोक्षपदं यदाख्यातं प्रतिपादितं सर्वद्वंद्वापगमरूपं तदस्यावश्यं चरणकरणानुष्ठायिनः साधोर्नवतीति ॥ २० ॥ समस्ताध्ययनार्थोपसंहारार्थमाह । ( इमंचधम्ममित्यादि ) इममिति पूर्वोक्तं मूलोत्तरगुणरूपं श्रुतचारित्राख्यं वा डुर्गतिधारणात् धर्ममादायाचार्योपदेशेन गृहीत्वा (किंनूतमिति)। तदेव विशिनष्टि। काश्यपेन श्रीमन्महावीरवर्धमानस्वामिना समुत्पन्नदिव्यज्ञानेन नव्यसत्वाऽनुग्रहणानिलापिणा प्रवेदितमाख्यातं समधिगम्य निक्षुः साधुः परीषहोपसर्गैरतार्जितोग्लानस्यापरस्यसाधोर्वैयावृत्त्यं कुर्यात् । कथमिति। स्वतोऽग्लानतया यथाशक्ति समाहितइति समाधिं प्राप्तः। इदमुक्तं नवति । कृतकृत्योहमिति मन्यमानोवैयावृत्त्यादिकं कुर्यादिति ॥ २१ ॥ अन्यच्च ( संखायइति ) संख्यायेति सम्यक् ज्ञात्वा स्वसंमत्या अन्यतोवा श्रुत्वा (पेशलंति) मोक्षगमनं प्रत्यनुकूलं किंतद्धर्मं श्रुतचारित्राख्यं दृष्टिमान् सम्यक्दर्शनी परिनिर्वृतइति। कषायोपशमाच्छीतीनूतः परिनिर्वृतकल्पोवा उपसर्गाननुकूलप्रतिकूलान् सम्यग् नियम्यातिसह्यामोक्षाय मोक्षंयावत् परिसमंतात् व्रजेत् संयमानुष्ठानेन गच्छेदिति। इतिशब्दः समाप्त्यर्थे। ब्रवीमीति पूर्ववत्। नयचापि तथैवेति ॥ २२ ॥ उपसर्गपरिज्ञायाः समाप्तश्चतुर्थोद्देशकस्तत्परिसमाप्तौ च तृतीयाध्ययनमिति । ग्रंथाग्रं ॥७७५॥

हवे प्रथम श्रुतस्कंधने विषे चोथुं अध्ययन प्रारंनियें बैयें. त्रीजा अध्ययननेविषे जे उपसर्ग कह्या तेमांहे अनुकूल उपसर्ग सहन करवा डुर्जनहे एम कह्युं हतुं, तेमाटे स्त्रीना करेला अनुकूल उपसर्ग सहन करवाने अर्थे चोथुं अध्ययन कहियें बैयें.

जे मायरंच पियरंच, विप्पजहाय पुव्वसंजोगं ॥ एगे सहिते चरिस्सामि, आरतमेहुणो विवित्तेसु ॥ १ ॥ सुहुमेणं तं परिक्कम्म

छन्नपएण इत्थिउ मंदा ॥ उवायंपि ताउ जाणं सु जहा लिस्संति भिक्खुणो एगे ॥ २ ॥

अर्थ—(जेके०) जे उत्तमसाधु (मायरंचपियरंचके०) माता पिता अने भाइ प्रमुखनो (पु संजोगंके०) पूर्वलो संयोग एटले आगलो संबंध तथा श्वशुरादिकनो पश्चात् संबंध एटले प छलथी थयलो संबंध तेने विप्पजहायके० छांमीने एगेके० एकलो रागद्वेषरहित अने ज्ञान दर्शन तथा चारित्रे करीने सहितेके०सहित एवो छतो,चरिस्सामिके०हुं संयम पालीश एवी प्रतिज्ञा करे; वली सेहुणो के० मैथुन थकी आरत के० निवर्त्योछे विवित्तेसु के० स्त्री पशु पंमग रहित एवा उपाश्रयनो गवेषणहार एवा साधुने पण कोइएक स्त्री विघ्न तारेछे ते कहेछे ॥ १ ॥ सुहुमेणं के० कोइएक कार्यने मीशे तंपरिक्कम्म के० ते साधु ने समीपे आवीने छन्नपएण के० छाने शब्दे, हलवे हलवे, अनेक गूढार्थ पदे करी ए टले मर्मना वचने करी, इत्थिउमंदाके० कोइक स्त्री मंद एटले विवेकरहित एवी छति पु रुपने वशकरवाना उवायंपि के० उपायने ताउ के० ते स्त्री जाणंसु के० जाणे जहा के० जे उपाये करीने एगेके० कोइक भिक्खुणो के० चारित्रिउ मोहनीय कर्मना उदय थकी स्त्रीने वश थई जाय अने लिस्संति के० संयम थकी पडी जाय. ॥ २ ॥

---

## अथ चतुर्थमध्ययनं.

॥ दीपिका—उक्तं तृतीयमध्ययनं । अथ चतुर्थमारभ्यते । तच्चस्त्रीपरीषहोजेयइत्यर्थेना चकं तस्येदमादिमंसूत्रं । जेमायरमिति । योमातरं पितरं चशब्दात्पुत्रादिकं च विप्रहाय त्य क्त्वा पूर्वसंयोगं एकोनिःसंगः सहितोज्ञानादिभिः स्वहितोवा चरिष्यामि संयमं करिष्यामी ति कृतप्रतिज्ञः । आरतमुपरतं मैथुनं कामाभिलाषोयस्य सआरतमैथुनोविविक्तेषु स्त्र्याद्य नाकुलेषु स्थानेषु चरतीति शेषः। अथवा विविक्तं स्थानं एषितुं मार्गितुं शीलमस्य विविक्तै षी॥१॥तं साधुं सूक्ष्मेन परकार्यव्यपदेशेन छन्नपदेन कपटेन पराक्रम्य समीपमागत्य मंदाम त्यमंदाः कामोद्रेककारित्वाद्विविवेकाः स्त्रियः शीलाद्भ्रंशयंति । कोर्थः । भ्रातृपुत्रव्यपदेशेन साधुसमीपमागत्य स्त्रियः संयमाद्भ्रंशयंति साधुमिति । प्रछन्नपदं गुप्ताभिधानं । यथा । का ले प्रसुप्तस्य जनार्दनस्य मेघांधकारासु च शर्वरीषु ॥ मिथ्या न भापामि विशाललनेत्रे ते प्र त्ययाये प्रथमाक्षरेषु इत्यादि । स्त्रियस्तथोपायंजानंति यथाश्लिष्यंते साधवोप्येके ॥ २ ॥

---

विषीदार—उक्तं तृतीयमध्ययनं सांप्रतं चतुर्थमारभ्यते । अस्य चायमभिसंबंधः इहानंतराध्य दृष्टिमान् स॰ प्रतिपादितास्तेषां च प्रायोनुकूलाङःसहास्ततोपि स्त्रीकृताश्चतस्तज्जयार्थमिद

मध्ययनमुपदिश्यतइत्यनेन संबंधेनायातस्याध्ययनस्योपक्रमादीनि चत्वार्यनुयोगद्वाराणि भवंति। तत्रोपक्रमांतर्गतोर्थाधिकारो द्वेधा। अध्ययनार्थाधिकारउद्देशार्थाधिकारश्च। तत्रा ध्ययनार्थाधिकारः प्राग्वत् निर्युक्तिकृता(थीदोषविवज्जाणा)चेवेत्यनेनस्वयमेव प्रतिपादितः। उद्देशार्थाधिकारं तूत्तरनिर्युक्तिकृदेव भणिष्यति।सांप्रतं निक्षेपः सचौघनामसूत्रालापकभेदा त्रिधा। तत्रौघनिष्पन्ने निक्षेपेऽध्ययनं नामनिष्पन्ने स्त्रीपरिज्ञेति नाम। तत्र नामस्थापने क्षु सत्वादनादृत्य स्त्रीशब्दस्य द्रव्यादिनिक्षेपार्थमाह। (दवाभिलावेत्यादि)। दवाभिला वचिंधे, देवेभावेयइच्छिणिक्खेवो। अहिलावे तहसिद्धी, भावे वेयंमिउवउत्तो॥ ५६॥ तत्र द्रव्यस्त्री द्वेधा। आगमतोनोआगमतश्च। आगमतः स्त्रीपदार्थज्ञस्तत्र चानुपयुक्तो नुपयोगोद्रव्यमिति कृत्वा नोआगमतोज्ञशरीरभव्यशरीरव्यतिरिक्तात्रिधा। एकभविका बद्धायुष्काभिमुखनामगोत्रावेति। चिन्ह्यते ज्ञायतेऽनेनेति चिह्नं स्तननेपथ्यादिकं चिह्नमा त्रेण स्त्री चिह्नस्त्री अपगतस्त्री वेदछद्मस्थः केवलीवा अन्योवा स्त्रीवेषधारी यः कश्चि दिति। वेदस्त्रीतु पुरुषाभिलाषरूपः स्त्रीवेदोदयः। अभिलापभावो तु निर्युक्तिकृदेव गाथाप श्चार्द्धेनाह। अभिलाप्यते इत्यभिलापः स्त्रीलिंगाभिधानः शब्दः। तद्यथा। शाला माला सिद्धि रिति। भावस्त्री तु द्वेधा। आगमतोनोआगमतश्च। आगमतः स्त्रीपदार्थज्ञस्तत्र चोपयुक्त उपयोगोभावइति कृत्वा नोआगमतस्तु भावविषये निक्षेपे वेदेस्त्रीवेदरूपे वस्तुन्युपयुक्ता तदुपयोगानन्यत्वाद्भावस्त्री भवति। यथाऽग्नावुपयुक्तोमाणवकोऽग्निरेव भवत्येवमत्रा पि। यदिवा स्त्रिवेदनिवर्तकान्युदयप्राप्तानि यानि कर्माणि तेपूपयुक्तेति तान्यनुभवंती भावस्त्रीति। एतावानेव स्त्रियोनिक्षेपइति। परिज्ञानिक्षेपस्तु शस्त्रपरिज्ञावद् द्रष्टव्यः। सां प्रतं स्त्रीविपक्षभूतं पुरुषनिक्षेपार्थमाह। (नामंठवणाइत्यादि)। णामंठवणादविए खेत्ते कालेयपज्जणणकंमे। भोगेगुणेयभावे, दसएएपुरिसणिक्खेवा॥५७॥ नामेति संज्ञा तन्मात्रे ण पुरुषोनामपुरुषः। यथाघटः पटइति यस्य वा पुरुषइति नामेति। स्थापनापुरुषः काष्ठा दिनिवर्तितोजिनप्रतिमादिकः। द्रव्यपुरुषोज्ञशरीरभव्यशरीरव्यतिरिक्तोनो आगमतएक भविकोबद्धायुष्कोभिमुखनामगोत्रश्चेति। द्रव्यप्रधानोवा मम्मणवणिगादिरिति। योयस्मिन सुराष्ट्रादौ क्षेत्रे भवः सक्षेत्रपुरुषोयथा सौराष्ट्रिकइति। यस्यच यत् क्षेत्रमाश्रित्य पुंस्त्वं भवतीति।योयावंतं कालं पुरुषवेदवेद्यानि कर्माणि वेदयते सकालपुरुषइति। यथा पुरिसेणं भंते पुरिसेत्ति कालओकेव चिरं होइ। गो. जहन्नेणं एगंसमयं उक्कोसेणंजोजम्मिकालेपुरि सोभ वइ। जन्नाकोइएगंमिपक्खेपुरिसोएगंमिनपुंसगोत्ति। प्रजन्यतेऽपत्यं येन तत्प्रजननं शिश्नं लिंगं तत्प्रधानः पुरुषः परपुरुषकार्यरहितत्वात् प्रजननपुरुषः। कर्मानुष्ठानं तत्प्रधानः पुरुषः कर्म पुरुषः कर्मकरादिकस्तथा भोगप्रधानः पुरुषोभोगपुरुषश्चक्रवर्त्यादिस्तथा गुणाव्यायाम विक्रमधैर्यसत्वादिकास्तत्प्रधानः पुरुषोगुणपुरुषः। भावपुरुषस्तु पुंवेदोदये वर्तमानस्तद्वेधा

नि कर्माण्यनुजवन्नित्येते दशपुरुषनिक्षेपाजवंति। सांप्रतं प्रागुल्लिंगितमुद्देशार्थाधिकार
कृत्याह (पढमेइत्यादि) पढमेसंथवसंजवमाइहिखलणाजहोतिसीलस्स। बितिएइहे
लियस्सअवज्ञाकम्मबंधोयं॥५७॥प्रथमे उद्देशके अध्ययनार्थाधिकारः।तद्यथा। स्त्रीनिःसा
संस्तवेन परिचयेन यथा संलापेन जिन्नकथाद्यालापेनादिग्रहणादंगप्रत्यंगनिरीक्षणादि
कामोत्काचकारिणोजवेदल्पसत्वस्य शीलस्य चारित्रस्य स्खलनात्तुशब्दात्तत्परित्यागोवेति
द्वितीये त्वयमर्थाधिकारस्तद्यथा। शीलस्खलितस्य साधोरिहैवास्मिन्नेव जन्मनि स्वप
रपक्षकृता तिरस्कारादिकाविमंबना तत्प्रत्ययश्च कर्मबंधस्ततश्च संसारसागरपर्यटनमिति
किं स्त्रीनिः कश्चित् शीलात् प्रच्याव्यात्मवशः कृतोयेनैवमुच्यते कृतइति दर्शयितु
ह। (सूरामोइत्यादि) सूरामोमन्नंता, कतिववियाहिंजवहिप्पहाणाहिं ॥ गहियाः
जयपक्ञोवकूलवालादिणोबहवे ॥ ५९ ॥ बहवः पुरुषाअजयप्रद्योतकूलवालादयः श
वयमित्येवं मन्यमानाः। मो इतिनिपातोवाक्यालंकारार्थः। कृत्रिमाभिः सद्भावरहिता
स्त्रीभिस्तथोपधिर्माया तत्प्रधानाभिः कृतकपटशतानिर्गृहीत्वा आत्मवशतां नीताः के
राज्यादपरे शीलात् प्रच्याव्येहैव विमंबनां प्रापिताः॥ अजयकुमारादिकथानकानिच मू
दावश्यकादवगंतव्यानि। कथानकत्रयोपन्यासस्तु यथाक्रमं मत्यंबुद्धिविक्रमात्पंतबु
विक्रमतपस्वित्वख्यापनार्थइति। यतएवं ततोयत्कर्तव्यं तदाह। तम्हाणजवीसंजोगं त
णिब्भमेवइत्थीसु ॥ पढमुद्देसेजणिया, जेदोसातेगणंतेणं ॥ ६०॥ (तम्हाइत्यादि)। यत
त् स्त्रियः सुगतिमार्गार्गलामायाप्रधानावंचनानिपुणास्तस्मादेतदवगम्य नैव विश्रंभ
श्वासस्तासां विवेकिना नित्यं सदा गंतव्योयातव्यः कर्तव्यइत्यर्थः। ये दोषाः प्रथम
शके अस्योपलक्षणार्थत्वात् द्वितीयेच तान् गणयता पर्यालोचयता तासां मूर्तिमत
टराशिभूतानामात्महितमिच्छता नविश्वसनीयमिति। अपिच। सुसमत्थावसमत्था,
रंतीअप्पसत्तियापुरिसा। दीसंतीसूरवादीणारीवसगाणतेसूरा ॥६१॥(सुसमत्थेत्यादि)।
नीकविजयादौ सुष्ठु समर्थाअपि संतः पुरुषाः स्त्रीभिरात्मवशीकृताअसमर्थाभूक्षेपम
जीरवः क्रियंतेल्पसात्विकाः स्त्रीणामपि पादपतनादिचाटुकरणेन निःसाराः क्रियंते
था दृश्यंते प्रत्यक्षेणोपलभ्यंते। शूरमात्मानं वदितुं शीलं येषां ते शूरवादिनोपि नारी
गाः संतोदीनतां गताः। एवंभूताश्च नते शूराइति। तस्मात् स्थितमेतदविश्वास्याः स्त्रि
ति। उक्तंच। कोवीससेज्ञतासिं,कतिवयभरियाणडुच्चियगणे। खणरत्तविरत्तेणं, धि
इत्थीणहियियाणं ॥ १ ॥ असुं भणंतिपुरउ असुंपासेइविज्ञमाणीउ। अन्नंच तासिं
ए, जंचखमंतंकरिंतिपुणो ॥२॥ कोएयाणंणाहिइ, वेत्तलयागुम्मगुविलहियियाणं ॥ ना
ग्गासाणं तहुपन्नंभणंतीणं ॥ ३ ॥ महिलायरत्तमेत्ता, उच्छुखंमंचसक्कराचेव। सा
विरत्तमित्ताणिंबंकूरेविसेसेत्ति ॥४॥ महिलादिज्ञकरेज्ञवमारिज्ञवसंठविज्ञमणुस्सं।

